ज्ञानभाण्डागारोद्धारक प्रवर्त्तक श्रीकान्तिविजयान्तेवासि लीम्बडीप्रभृतिनगरस्थप्राचीनज्ञान-भण्डारोद्धारक श्रीआत्मानन्दजैनग्रन्थमालासम्पादकमुनिवर श्रीचतुरविजयजीशिष्याणु-शिष्यरत्नैः समग्रजिनागमपुनःसर्वाङ्गसंशोधनेच्छुकैर्मुनिपुण्यविजयैः स्वबृहद्गुरुबन्धुपूज्यपाद श्रीमेघविजयजीमहाराजच्छत्रच्छायास्थितैः पूज्यप्रवरचारित्रचूडामणिश्रीहंसविजयजी महाराजान्तिषदतिविनीतभावपूर्ण प्रज्ञांशश्रीसम्पतविजयजी शिष्याणु अनेकग्रंथसंशोधन-प्रतिलिपिविधानप्रवीण मुनिश्रीरमणीकविजयजीसंयुतैः स्वशिष्य श्रीजयभद्रविजयजीपरि-वृतैरत्रत्यदुर्गस्थितप्राचीनतमजैनज्ञानकोशस्य ग्रन्थालेखन-संशोधन-पृथक्करण-टिप्पविधाना-दिना सर्वाङ्गीणो जीर्णोद्धारो विहितः। अपि चैतद्भण्डारजीर्णोद्धारादिसमस्तकार्येषु अनेक-कार्यविधानकुशलो न्यायतीर्थवेलाणीश्रीफत्तेहचन्द्रो भोजककुलभूषणः पण्डितश्रीअमृ-तलालः सततसंशोधनादिलीन पण्डितश्रीनगीनदासः लेखनकलाप्रवीणो भोजकचीमन-लालश्च एते चत्वारोऽपि विद्वांसः सततसहायिनोऽभूवन्। तथा राजनगरीयश्रीगूजरात विद्यासभया स्वीयद्रव्यव्ययेन प्रहिताः श्रीजितेन्द्रभाई जेटली एम. ए. न्यायाचार्या अप्यत्रत्यज्ञानकोशस्थदार्शनिकग्रंथसंशोधनादिषु सहायका आसन्। तथैवात्रत्यभण्डारजीर्णो-द्धाराद्युपयोग्यन्यान्यकार्येष्वनवरतश्रमी भोजककुलनंदनो लक्ष्मणदासो रसिकलालश्चापि सहायिनावभूताम्। रसवतीकारको वीरचन्द्रः ठाकोरमाधवसिंहश्चापि सोत्साहभावेन सर्वेषामानंददायिनावभूताम्।

अपि चैतज्जीर्णोद्धाराद्यर्थं समस्ता द्रव्यादिव्यवस्था श्रीजैनश्वेताम्बरकोन्फरन्स बम्बई संस्थया विहिता। तत्रोपर्युक्तविद्वत्समूहद्रव्यव्ययव्यवस्था सर्वाऽप्यणहिल्लपुरपत्तन-वास्तव्य-ज्ञानभक्तिभृत् सुश्रावकश्रेष्ठि श्रीकीलाचन्द्रात्मज श्रीकेशवलालसत्प्रेरणया पत्तनी-योदारचेतस्क-जिनप्रवचनानुरागिणा श्रेष्ठि पोपटलालसुपुत्रेण श्रीचीमनलालेनात्मीय-ज्ञानावरणीयादिक्लिष्टकर्मनिर्जरार्थं विनिर्मिता। अपरा च ग्रन्थकाष्ठपट्टिका-दवरक-वस्त्रवेष्टन मञ्जूषा-ऊर्ध्वमहामञ्जूषा (कबाट) आदिविषया ग्रन्थप्रतिबिम्बन (माइक्रोफिल्मिगफोटोग्राफी) विषया च द्रव्यव्यवस्था विश्वाऽपि श्रीजैन श्वे० को० कार्यकरविज्ञप्त्या तत्तत्स्थानीयश्री-सङ्घैर्विहिता। तथाहि—श्रीगोडीजीजैनश्रीसङ्घ बम्बई रू० १००००। कोटश्रीसङ्घ बम्बई रू० २०००। पूना श्रीसङ्घ २०००। कलकत्ता श्रीसङ्घ २०००। श्रेष्ठिश्रीहेम-चंदभाई—भूपेन्द्र ब्रधर्स बम्बई २५००। वडोदरा जानीसेरीश्रीसङ्घ ७५१। वडोदराश्री आत्मारामजीजैनज्ञानमंदिर ७५१। वहेन जसकोरवहेन झवेरी ह० हसमुखवहेन झवेरी वडोदरा ५००। शा० छगनलाल लक्ष्मीचंद वडु ४०१। एतत्सर्वसहायकारिभ्योऽप्य-त्युपयोगि साहाय्यं श्रीजेसलमेरु श्रीसङ्घचित्कोशव्यवस्थापक सङ्घमुख्य श्रेष्ठि महेता श्री

रतनलालजीनंदन श्रेष्ठि श्रीरामसिंहजी-श्रेष्ठि श्रीफत्तेसिंहजी महेता-संघवी श्रेष्ठि श्रीआयदानजी बाफणा-श्रेष्ठि श्रीकेसरीमलजी जिंदाणी सुपुत्र श्रेष्ठि श्रीप्यारेलालजी प्रभृतिभिर्वितीर्णम्, यद् एतैर्निर्मलज्ञानभक्तिशालिभिः समस्तोऽपि ज्ञानकोशो व्यवस्थाद्यर्थं समर्पितो येन ज्ञानकोशव्यवस्थादिसौकर्यं समजनि। अपि चात्र पञ्चदशमासाधिकसमयस्थित्या जीर्णोद्धारादि सर्वं कार्यं निर्वाहितमिति भद्रं श्रीसंघभट्टारकस्य।

प्रशस्तिर्लिखितेयं चीमनलालेन। उत्कीर्णा च मेडती सिलावट ईस्माइलेन। वीर संवत् २४७७॥ श्री॥ शुभं भवतु॥

तपागच्छाधीशश्रीविजयानंदसूरिपट्टप्रभाकर श्रीविजयवल्लभसूरिधर्मसाम्राज्ये स्वतन्त्र-भारतमहासाम्राज्यगणतन्त्रच्छायास्थमहारावलजी श्रीरघुनाथसिंघजी साहबबहादुर विजयराज्ये ॥ श्री ॥

